**राजा**—प्रिये,

मानिन्याश्चिरविप्रयोगजनितासूयाकुलाया भवे-
　　च्छान्त्यादेरनुकूलनादुपनिषद्देव्या मया संगमः ।
तूष्णीं चेद्विषयानपास्य भवती तिष्ठेन्मुहूर्तं ततो
　　जाग्रत्स्वप्नसुषुप्तिधामविरहात्प्राप्तः प्रबोधोदयः ॥ ३० ॥

**मतिः**—*अज्जउत्त, जंदि[1] एवं कुलप्पहुणो दिढगंथिणिबद्धस्स वि बन्धमोक्खो भोदि तदो ताए णिच्चानुबन्धो जेव्व अज्जउत्तो भोदु त्ति सुट्ठु मे पिअम् ।

**राजा**—प्रिये, यद्येवं प्रसन्नासि सिद्धास्तर्ह्यस्माकं[2] मनोरथाः । तथा हि—

* आर्यपुत्र यद्येवं कुलप्रभोर्दृढग्रन्थिनिबद्धस्याऽपि बन्धमोक्षो भवति तदा तया नित्यानुबन्ध एवार्यपुत्रो भवत्विति सुष्ठु मे प्रियम् ।

सापराधं कान्तान्तरासङ्गवशादिति हृद्गतम् ॥—**मानिन्या इति** । मानिन्या मानवत्याः । मानो नाम स्त्रीणां प्रियेऽन्यासङ्गिनि सतीर्ष्याकृतः कोपः । शान्त्यादेरिति पञ्चम्यनुकूलनान्नायिकानायकयोरित्यर्थः । जाग्रत्स्वप्नेत्यादिव्याख्या । अत्रोद्भेदो नाम मुखसन्धेर्दशममङ्गं सूचितम् । गूढार्थभेदसूचनात् । तल्लक्षणम्—'उद्भेदः

सितं मतेः कालुष्यं त्याजयति—**मानिन्या इति** । यदि उपनिषद्देव्याः मया सह संगमः स्यात्तदा प्रबोधोदयः प्राप्त इत्यन्वयः । कीदृश्या उपनिषद्देव्या । मानिन्याः 'स्त्रीणामीर्ष्याकृतः कोपो मान इत्यभिधीयते' इति लक्षणादीर्ष्याकृतकोपवत्याश्चिरं विप्रयोगो वियोगस्तेन जनिता यासूयेर्ष्या तयाकुलाया व्याकुलायाः । संगमे हेतुः । शान्त्यादेरनुकूलनादिति । हेत्वन्तरमाह—**भवतीति** । भवती विषयानपास्य मुहूर्तं तूष्णीं तिष्ठेच्चेत्तदा जाग्रत्स्वप्नसुषुप्तिधामविरहादिति । धामशब्दोऽत्र स्थानवाचकः । 'धामानि त्रीणि भवन्ति स्थानानि जन्मानि नामानि' इति नैरुक्तम् । तथा चायमभिप्रायः । जाग्रदाद्यभिमानस्थानाभावाच्छान्त्यादिमतो विचारप्रवृत्तस्य बुद्धेर्व्यासङ्गाभावात्प्रबोधोत्पत्तिरिति ॥ ३० ॥ [**मतिः**—आर्यपुत्र, यदि एवं कुलप्रभोर्दृढग्रन्थिनिबद्धस्यापि बन्धमोक्षो भवति, तदा तया नित्यानुबन्ध एवार्यपुत्रो भवत्विति सुष्ठु मे प्रियम् । आर्यपुत्र, दृढग्रन्थिरहंकारस्तन्निबद्धस्य तदभिमानिनोऽपि यदि बन्धमोक्षः

१ 'जइ एव्वं इति पाठः । २ '०स्तर्हि चिरमस्माकं' इति पाठः ।

बद्धैको बहुधा विभज्य जगतामादिः प्रभुः शाश्वतः
क्षिप्त्वा यैः पुरुषैः पुरेषु परमो मृत्योः परं प्रापितः।
तेषां ब्रह्मभिदां विधाय विधिवत्प्राणान्तिकं विद्यया
प्रायश्चित्तमिदं मया पुनरसौ ब्रह्मैकतां नीयते ॥ ३१ ॥

---

स परिज्ञेयो यत्र गूढार्थसूचनम्' ॥ ३० ॥—**बद्धैक इत्यादि।** एकोऽद्वि[...] जगतामादिर्जगदुपादानं। तत्त्वादिवदनित्यः किं नेत्याह। शाश्वत इति। 'शा[...]त ॐशिवमच्युतम्' इति श्रुतेः। परमो विभुः स्वामी यैः पुरुषैः पुत्रायितैर्मनो[...] पुरेषु लिङ्गदेहेषु क्षिप्त्वा निधाय मृत्योः पदं संसारितां प्रापितः, मरणं च प्रा[...] इत्यवगम्यते। परं नाम ज्ञानेन्द्रियपञ्चकम्, कर्मेन्द्रियपञ्चकम्, अहंकारादि[...]ष्टयम्, प्राणादिपञ्चकम्, वियदादिपञ्चकम्, अविद्याकामकर्माणीत्यष्टपुरा[...] यथोक्तं संक्षेपशारीरके—'कर्मेन्द्रियाणि खलु पञ्च तथा पराणि बुद्धीन्द्रियाणि[...] मनाक्षचतुष्टयं च। प्राणादिपञ्चकमथो वियदादि पञ्च कामश्च कर्म च [...] पुनरष्टमीषु ॥' पुनःपातित्वाल्लिङ्गदेहमपि पुनरपि व्यपदेष्टुं शस्यते। पुरा[...]पातित्वं लिङ्गदेहस्योक्तं संक्षेपशारीरके—'इह तावदक्षदशकं मनसा [...] बुद्धितत्त्वमथ वायुगुणः। इति लिङ्गमेतदुदितं त्वमुना सह संगतो भवति जीव[...] इति। ब्रह्मभिदां ब्रह्मणोभेदसंपादकानां ब्रह्माहन्तृणामिति च गम्यते। [...] विधिवद्यथाविधि। क्रियाविशेषणमेतत्। प्रायश्चित्तमिति। प्रायो विनशनं। [...] सन्धानं। यथोक्तं धूर्तस्वामिना नवमप्रश्ने श्रुतिलक्षणं 'प्रायश्चित्तं वि[...]राधे विधीयते' इत्यत्र प्रायःशब्दो विनाशवचनः प्रसिद्धः। चित्तिः सन्धान[...] कस्कादित्वात्सुट् इति। विनष्टानां कर्मणां पुनःसंधानात्मकं कर्मेत्यर्थः। वि[...] प्राणान्तिकम्। निदिध्यासनपर्यन्तमित्यर्थः। विद्यया वेदान्तार्थश्रवणेन य[...] बहु निश्चितं विधाय मनोविवेकेन पुनरसौ पुरुषो ब्रह्मैकतां नीयते प्राप्यते[...] यद्वा विद्यया वेदान्तार्थज्ञानेन प्राणान्तिकं प्राणावधिकमत्यन्तशरीरशोषणम् यद्वा द्वादशवार्षिकं नतु भृगुपातादिकम्। ब्रह्मैकतां नीयत इत्यत्र पुनर्ब्रा[...] संव्यवहारः प्रतीतेऽस्मिन्प्रतीतार्थे विद्याशब्दः कर्माङ्गभूतज्ञानपरः।

---

संसारनिवृत्तिस्तदा तया(ऽनादिमायया) उपनिषद्भ्या नित्यानुबन्ध एवाहंका[...]भिमान्येव नित्यसंगतिरेव भवत्विति प्राकृतान्वयः। अहंकारस्य परमते नित्य[...]च्छाशाभावादिति भावः ॥—**बद्धैक इति।** मयासावात्मा ब्रह्मैकतां चिदानन्द[...]क्यभावं नीयते। किं कृत्वा। तेषां पूर्वोक्तानां ब्रह्मभिदां ब्रह्मभेदकानां वि[...] ब्रह्माद्वैतसाक्षात्कारेण प्राणान्तिकं देहान्तं प्रायश्चित्तमिदं प्रसिद्धं विधाय कृत्वा। [...]षामित्यत्र ते के। यैर्जगतामादिः प्रभुः स्वतन्त्रः शाश्वतोऽविनाशी एवंभूतोऽपि पु[...]

तद्भवतु । प्रस्तुतविधानाय[1] शमादीन्योजयामः ।

(इति निष्क्रान्तौ[2] मतिविवेकौ ।)

ति श्रीकृष्णमिश्रयतिविरचिते प्रबोधचन्द्रोदये प्रथमोऽङ्कः ॥ १ ॥

---

ातिष्ठत्' इति वचनात् ॥ ३१ ॥ अत्र भेदो नाम मुखसन्धेरेकादशमङ्गम् । ना-
ाकया नायकस्य प्रोत्साहकरणात् । तल्लक्षणं तु—'भेदः प्रोत्साहकरणम्' । **तद्भ-
त्वित्यादि** । अत्र शमादियोजनेन कृतारम्भकरणं नाम द्वादशमङ्गं निरूपि-
म् । तल्लक्षणम् 'करणं प्रकृतारम्भः' इति । अत्र सा खलु विवेकेनोपनिषद्देव्यां
बोधचन्द्रेण भ्रात्रा समं जनयितव्येत्यत्र कथाबीजमुद्दङ्कितम्—'स्वल्पोद्दिष्टः
ार्यहेतुर्बीजं विस्तार्यनेकधा' ॥ प्रथमं स्वल्पत्वोद्दिष्टः पश्चादनेकधा विस्तारिहेतुर्वि-
यमाणस्य कार्यस्य हेतुतयाऽर्थंकृतस्तद्बीजमुच्यते । '···औत्सुक्यमारम्भः फ-
लाभाय भूयसे' इति । इदमहं संपादयामीत्यध्यवसायमात्रमारम्भ इत्युक्तम् ।
ाकरणं प्रकृतारम्भः । अनयोः साधने सन्धिः । एतदुक्तं भवति । 'आद्यन्तमेवं
तेश्लिष्य पञ्चधा तद्विभज्य तु । खण्डं सन्धिश्च संज्ञास्तान्भागानपि च खण्डयेत् ॥
तुःषष्टिश्च तानि स्युरङ्गानीति विदुर्बुधाः । अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो
वेत् ॥ अङ्गहीनं तथा नाट्यं न प्रयोगक्षमं भवेत् ॥' इति । अतोऽङ्गनिरूपणं
ाटकादावावश्यकम् । निष्क्रान्तौ मतिविवेकौ । **प्रथमोऽङ्क इति** । अङ्कशब्दश्चि-
वाची । अङ्कयते नायकतादात्म्यं नटेनात्रेत्यङ्कः । अङ्कलक्षणम्—'प्रत्यक्षनेतृचरितो
बीजविन्दुसमन्वितः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ एकाहे चैकरात्रे वा
रित्रं यत्र वर्ण्यते । प्रयुक्तैः पञ्चषैः पात्रैस्तेषामन्ते विनिर्गमः ॥' अत्र नेतृशब्देन
ायकानायकप्रतिनायिका गृह्यन्ते । तेषां नेतृणां चरितं प्रत्यक्षनेतृचरितं रङ्गप्रदेशे
काश्यं यत्र स तथोक्तः । प्रसक्तार्थोपसंहारी प्रसक्तार्थस्योपसंहारो यस्मिन्निति स
थोक्तः । पताकास्थानकेनान्वितः । पताकास्थानकलक्षणं वक्ष्यते—नानाप्रकाराणि
हुविधान्यर्थानामभिधेयानां संविधानानि रचनाविशेषाः यत्र रसे स तथोक्तस्तद्र-
स्याश्रयः स्थानम् । एवंविधवस्तुविभागोऽङ्क इत्युच्यते । शेषं सुगमम् ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापश्रीकृष्णरायमहाराजसाम्राज्यधुरन्धर-
श्रीसाल्वतिम्मदण्डनायकभागिनेयनाण्डिल्लगोपमन्त्रिशेखरविरचितायां प्रबो-
धचन्द्रोदयव्याख्यायां चन्द्रिकासमाख्यायां प्रथमोऽङ्कः ॥ १ ॥

---

रमेश्वरः पुरेषु नरकायादिष्वेक एव बहुधा विभज्य बद्ध्वा क्षिप्त्वा प्रवेश्य मृत्योः पदं
जननमरणस्थानं प्रापितः ॥ ३१ ॥—प्रस्तुतविधानाय पूर्वोक्तार्थसिद्धये । प्रबोधोत्पत्तये-
द्वितीयात्मसाक्षात्कारोत्पत्तये ॥ इति श्रीप्र०दयव्याख्याने प्रकाशाख्ये प्रथमोऽङ्कः ॥ १ ॥

---

१ 'विधानाय प्रारब्धकरणीयविशिष्टदेशकालपात्रेषु प्रबोधोत्पत्तये शमादीन्' इति पाठः । २ 'निष्क्रान्ताः सर्वे' इति पाठः ।

५

## द्वितीयोऽङ्कः २ ।

(ततः प्रविशति दम्भः ।)

**दम्भः**—आदिष्टोऽस्मि महाराजमहामोहेन । यथा—दम्भ, प्रतिज्ञातं सामात्येन विवेकेन प्रबोधोदयाय । प्रेषिताश्च तेषु तीर्थेषु शमदमादयः । स चायमस्माकमुपस्थितः कुलक्षयो भ िद्भिरवहितैः प्रतिकर्तव्यः । तत्र पृथिव्यां परमं मुक्तिक्षेत्रं वारा

---

इतः परं प्रतिमुखसन्धिः प्रस्तूयते । 'विन्दुप्रयत्नयोः संबन्धः प्रति खसन्धिः' इति । तल्लक्षणमुक्तम्—'लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रति भवेत् । बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥' अस्यार्थः—तस्य बीज किंचिल्लक्ष्य इवोद्भेदः प्रकाशनम् । तत्प्रतिमुखं नाम बीजमेव महाकार्यावा भेदादनेकविधम् । अवान्तरकार्येण प्रधानकार्यविच्छेदे यदविच्छेदकारणवमु न्दुरिति । तदुक्तं दशरूपके—'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' प्र तस्याङ्गानि त्रयोदश—'विलासः परिसर्पश्च विधूतं शर्मनर्मणी । नर्मद्युति प्रगमनं निरोधः पर्युपासनम् ॥ पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि' एव स्वरूपमुदाहरणनिरूपणसमये निरूपयिष्यामः । द्वितीयाङ्कपात्रं नेपथ्यसंज्ञ पसन्धिनोपक्षेप्तुकामः कथासंघट्टनमात्रस्वरूपं नीचपात्रप्रयुक्तं प्रवेशकं संध्यन्तरालं तावदाह—**ततः प्रविशति दम्भ इति** । अत्र दूतकृत्यं न पसन्धिः । यथोक्तम्—'प्रश्नो दूतश्च लेख्यं च नेपथ्योक्तिस्तथैव च । आ भाषणं चेति विज्ञेयाः पञ्च सन्धयः ॥' इति । दम्भस्य महामोहदूतत्वात् विनैव प्रवेशः । 'अनासूचितपात्रस्य पटाक्षेपात्प्रवेशनम् । राजादेरपि चा दद्भुतादिप्रदर्शनात् ॥' आदेशप्रकारमाह—**वत्स दम्भ इति** । राज्ञस्तस्मि त्सल्यं दर्शयति—**प्रतिज्ञातमित्यादि** । प्रबोधोदयाय सामात्येन विवेकेन प्रति तमित्यन्वयः । तत्रोपायोऽपि कृत इत्याह—**शमदमेत्यादि** । शमदमादयः षिताः । स चायमित्यादि । स चायं कुलक्षय इत्यन्वयः । तत्र पृथिव्यामित्या पृथिव्यां परमं मुक्तिक्षेत्रं वाराणसीति । तथाच श्रुतिः—'अथ हैनमत्रि

---

प्रथमेऽङ्केऽज्ञानकृतो निखिलोऽपि भेदावभास आत्माद्वैतावभासान्निरस्यत प्रतिपाद्य विवेकोद्योगमुपश्रुत्य इदानीं द्वितीयेऽङ्के महामोहोऽपि तत्तद्धर्मानुष्ठान ल्याय दम्भादीन्प्रेषयति । तथोक्तं 'दम्भं विना यः क्रियते स धर्मः' इति । **प्रविशति दम्भ इत्यादि** । सामात्येन अमात्या मन्त्रिणस्तत्सहितेन । अवहितैर नयुक्तैः । सावधानैरित्यर्थः । प्रतिकर्तव्यो दूरीकर्तव्यः । निःश्रेयसविघ्नार्थं मोक्षप्र

ीनाम नगरी । तद्भवांस्तत्र गत्वा चतुर्णामप्याश्रमाणां निःश्रेयसविघ्नार्थं प्रयततामिति । तदिदानीं वशीकृतभूयिष्ठा मया वाराणसी । संपादितश्च स्वामिनो यथानिर्दिष्ट आदेशः । तथाहि मदधिष्ठितैरेदानीम्—

वेश्यावेश्मसु सीधुगन्धिललनावक्त्रासवामोदितै-
नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ १ ॥

प्रच्छ याज्ञवल्क्यम् । य एषोऽनन्तोऽव्यक्त आत्मा कथमहं विजानीयामिति । सहोवाच याज्ञवल्क्यः । सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठितः वरणायामस्यां च मध्ये प्रतिष्ठित इति । का वरणा काचाऽसीति सर्वानिन्द्रियकृतान्दोषानस्यत इत्यनेनासिर्भवति' इति । अतो वाराणसीति निर्वचनम् ॥—**तदिदानीमित्यादि ।** वशीकृतभूयिष्ठा अत्यन्तवशीकृता । मयूरव्यंसकादित्वात्समासः । संपादितश्चेत्यादि । संपादितः संपादितप्राय इत्यर्थः । मदधिष्ठितैर्मदधीनैर्धूर्तैरित्यन्वयः ॥—**वेश्यावेश्मस्वित्यादि ।** वेश्यानां वाराङ्गनानां वेश्मसु सद्मसु सीधुर्मद्यं तद्गन्ध इव गन्धो येषां तानि सीधुगन्धानि तानि च तानि ललनावक्त्राणि च तेष्वासवो मदिरा तेन मोदिताः संजातमोदास्तैः । हृष्टैरित्यर्थः । यद्वा सीधुना मद्येन गन्धो गर्वस्तद्युक्ताश्च ता ललनाश्च । मध्यमपदलोपी समासः । शेषं समानम् । निर्भरमन्मथोत्सवरसैः मन्मथोत्सवा मन्मथकेलयः तेषु निर्भर उत्कृष्टो रसः प्रीतिर्येषां तैः । उन्निद्रचन्द्राः प्रकाशमानश्चन्द्रो यासु ताः क्षपा रात्रयस्ताः । अत्रोन्निद्रचन्द्रपदेनोद्दीपनविभावः कथितः । नीत्वा गमयित्वा रात्रौ वेश्याभिः

न्धार्थं प्रयततामतिशयितो यत्नः क्रियताम् । अल्पयत्नेन न भवतीति भावः । यथानिर्दिष्टः यथात्वेनोक्तः । आदेश आज्ञा । **मदधिष्ठितैरिति ।** मया दम्भेनाधिष्ठितैः । दाम्भिकैरित्यर्थः ॥—**वेश्येति ।** धूर्तैर्वञ्चकैर्दिवा दिन एव जगन्नरनारीसमुदायात्मकं इति अनेन प्रकारेण सर्वज्ञत्वादिव्यपदेशेन वञ्च्यते प्रतार्यते । किं कृत्वा । वेश्यावेश्मसु वारविलासिनीमन्दिरेषु क्षपा रात्रीर्नीत्वातिवाह्य । कीदृश्यः क्षपाः । उन्निद्रः प्रकाशयुक्तः प्रकटश्चन्द्रो यासु ताः । कीदृशैर्धूर्तैः । सीधु मद्यं तद्गन्धो यत्र तादृशं ललनावक्त्रं कामिनीमुखं तत्रासवो मादकद्रव्यविशेषो मदिरा वा तया मो-

१ 'मया यथा' इति पाठः । २ 'त्सवरतिः' इति पाठः ।

(विलोक्य ।) कोऽप्ययं पान्थो भागीरथीमुत्तीर्य सांप्रतमित ए-
भिवर्तते । तथा च यथैषः—

ज्वलन्निवाभिमानेन ग्रसन्निव जगत्त्रयीम् ।
भर्त्सयन्निव वाग्जालैः प्रज्ञयोपहसन्निव ॥ २ ॥

तथा तर्कयामि । नूनमयं दक्षिणराढाप्रदेशादागतो भविष्यति । तदेतस्यार्यस्याहंकारस्य[1] वृत्तान्तमनुस्मरिष्यामि (इति परिक्रामति)।

(ततः प्रविशत्यहंकारो यथानिर्दिष्टः ।)

**अहंकारः**—अहो, मूर्खबहुलं जगत् । तथाहि—

---

क्रीडित्वा दिवा धूर्तैः सर्वज्ञा इति, दीक्षिता इति, चिरप्राप्ताग्निहोत्रा अ- च्छिन्नाग्निहोत्रा इति, ब्रह्मज्ञा जीवन्मुक्ता इति, तापसा वानप्रस्था मनीषां जगतां स्वेषु संपादयद्भिर्जगद्वञ्च्यते प्रतार्यते ॥ १ ॥—विम- दनुनिर्णयाख्येन पताकास्थानकेन पात्रप्रवेशं सूचयति—**कोऽप्ययमित्यादि** तदुक्तं सरस्वतीविलासे—'पताकास्थानकं प्राहुर्भाविनोऽर्थस्य सूचनम् । चतु- कारणैरेतैश्चतुर्धा परिकीर्तितम् ॥ सहसैवार्थसंपत्त्या विमर्शादनुनिर्णयात् । तु- ल्येन संविधानेन तथा तुल्यविशेषणात् ॥' इति । अत्र विमर्शादनुनिर्णयः । को- ऽप्ययं पान्थ इति संदिह्यमानमयमित्यनुनिर्णयात् । यथा विक्रमोर्वशीये 'सूतः- 'आयुष्मन्, पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः । अयं च गगनात्को- तप्तचामीकराङ्गदः । अधिरोहति शैलाग्रं तडित्त्वानिव तोयदः । पश्यन्त्योऽप्सरसः अम्मो चित्तरहो । ततः प्रविशति चित्ररथः' । ततः पात्रस्यावधारणानन्तरम- रोभिरम्मो चित्तरहो इत्युक्तिरिति निर्णीतम् । तदिदं विमर्शानुनिर्णयकृतं पताकास्था- नकम् ॥ **ज्वलन्निति** । स्पष्टार्थः ॥२॥ **तथेति** । दक्षिणराढाप्रदेशाद्दक्षिणराढा- मेकं धारानगरं वाराणस्या दक्षिणस्यां दिशि वर्तते गौडराष्ट्रादागतः । गौडराष्ट्रमहंका- रोत्पत्तिस्थानमिति प्रसिद्धिः । **परिक्रामतीति** । परिक्रमणमभिनयविशेषः । त-

---

दितैः संतुष्टैः । पुनः कीदृशैः । निर्भरोऽतिशयितो मन्मथोत्सवो मैथुने रतिः प्री- र्येषां तैः । सुगममन्यत् ॥ १ ॥ यथैष इत्युत्तरान्वयि ॥—**ज्वलन्निति** । पूर्व- सुगमम् । वाग्जालैर्जगत्त्रयं भर्त्सयन्निवेत्यनुषङ्गः । उपहसन्नुपहासं कुर्वन्निवेत्यत्रा- षङ्गो जगत्त्रयमित्यस्य ॥ २ ॥ वृत्तान्तं समाचारमनुस्मरिष्यामि ज्ञास्यामि ॥-

---

१ 'तदेतस्मात्' इति पाठः ।

नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनं
तत्त्वज्ञानमहो न शारिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि महोदधेरधिगतं माहाव्रती नेक्षिता
सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते ॥ ३ ॥

---

**विशतीत्यादि** । मूर्खबहुलं मूर्खप्रायम् । पशुतुल्यमित्यर्थः ॥ **नैवाश्रावीत्यादि** । गुरोः प्रभाकरगुरोर्मतं शास्त्रं नैवाश्रावि नाधीतमेव । कौमारिलं कौमारिलो भट्टाचार्यस्तेन कृतं शास्त्रं दर्शनं कौमारिलं न विदितं न ज्ञातम् । शारिकगिरां शारिका अस्य कार्यत्वेन सन्तीति शारिकः । अर्शआदित्वादच् । तस्य गिराम् । यद्वा शारिकाख्यो ग्रन्थः तत्संबन्धिन्यो गिरस्तासाम् । 'पुंवत्–' इत्यादिना पुंवद्भावः । शारिका नाम गुरुकृतस्य निबन्धनविवरणाख्यस्य शाबरभाष्यटीकाद्वयस्य पञ्चकाद्वितयं ऋजुविमलादीपशिखाख्यं तद्गिरां तत्त्वज्ञानं सिद्धान्तज्ञानं नास्ति । अहो आश्चर्यम् । वाचस्पतेः का कथा । अत्र वाचस्पतिशब्देन तत्कृतो ग्रन्थस्तस्य का कथा वार्ता । अविदितपूर्वमीमांसातत्त्वस्य वाचस्पतिमतितत्त्वापरिज्ञानात् । महोदधिर्नाम शारिक नामा सह ब्रह्मचारी गुरुमतेर्निबन्धनकर्ता भवनाथवत् तस्य सूक्तं सिद्धान्तरहस्यं नाधिगतम् । माहाव्रतं महाव्रतो नाम भट्टमतानुवर्ती महोदधिप्रतिस्पर्धी भवदेववद्भवनाथवत् शारिकनाथमहोदधिमतानुवर्ती महोदधिः शारिकनाथप्रतिस्पर्धी इदानीमाचार्यमते भवदेवमतस्य गुरुमते भवनाथमतस्यैव प्राचुर्यमिति ग्रन्थकारैरनुल्लिखितमपि मतद्वयमस्माभिरुक्तम् । सूक्ष्मा तद्वस्तुविचारणा । गुरुमुखादिति शेषः । नेक्षिता नाभ्यस्ता । अतो नृपशुः । ज्ञानशून्यानां पशुतुल्यतया पशुत्वव्यपदेशः । यथोक्तम्—'आहारनिद्राभयमैथुनानि समान्यमीषां(सामान्यमेतत्)पशुभिर्नराणाम् । ज्ञानं नराणामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः ॥' इति । ज्ञानसाधनभूतां विचारणां विहाय स्वस्थैः स्वस्थचित्तैः । कथं

---

**नैवेति** । नृपशुभिर्मनुष्यरूपैः पशुभिर्गुरोः प्रभाकरस्य मतं नैवाश्रावि नैव श्रुतम् । तौतातितं दर्शनं कौमारिलं शास्त्रं न विदितं नैव ज्ञातमित्येवकारानुषङ्गः । सर्वत्र अहो इत्याश्चर्ये । शारिकगिरां प्रभाकरमतावलम्बिवाचां तत्त्वमनारोपितरूपं स्वरूपं नैव ज्ञातम् । वाचस्पतेर्न्यायभाष्यव्याख्यातुर्वेदान्तभाष्यव्याख्यातुश्च का कथा । न कापि वार्तेत्यर्थः । महोदधेः सूक्तं शेषप्रणीतभाष्यस्य सूक्तं स्पष्टमपि नाधिगतम् । दुरुक्तं तु न सुतराम् । महाव्रतं पाशुपतव्रतं तत्संबन्धिनी माहाव्रती पाशुपतशास्त्रसंहतिर्नेक्षिता न दृष्टा । वस्तुविचारणा सूक्ष्मा, वस्तु औपनिषदं ब्रह्म तद्विचारणा

---

१ 'तौतातितं' इति पाठः । २ 'तत्त्वं ज्ञान' इति पाठः ।

(विलोक्य) एते तावदर्थावधारणविधुराः स्वाध्यायाध्ययनमात्र-निरता वेदविप्लावका एव। (पुनरन्यतो गत्वा) एते च भिक्षामात्रगृहीतयतिव्रता मुण्डितमुण्डाः पण्डितंमन्या वेदान्तशास्त्रं व्याकुलयन्ति। (विहस्य)

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥ ४ ॥

स्थीयते। भावे यक्। 'अजरामरवत्प्राज्ञो विद्यामर्थं च साधयेत्। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥' इत्युपदेशः कथं विस्मृत इति भावः। अनेन वचनभङ्ग्या ग्रन्थकारः स्वमाहात्म्यं प्रकटितवानिति विज्ञायते ॥ ३ ॥—विलोक्येति। अभिनयविशेषः। विलोक्य घटशासिन इति शेषः। एते तावदित्यादि। एते घटशासिनः। अर्थज्ञानविधुरा अर्थज्ञानशून्याः। अत एव वेदविप्लावका वेदोपद्रवकारिणः। वेदनाशका इत्यर्थः। एतदुक्तं भवति। स्वाध्यायाध्ययनमर्थावबोधपर्यन्तम्। अर्थावबोधश्चानुष्ठानपर्यन्तः। अर्थावबोधानुष्ठानयोरभावे घटशासिनां स्वाध्यायाध्ययनमात्रनिरतानां स्वत एवायाति वेदविप्लवत्वमिति। पुनरन्यतो गत्वेत्यभिनयविशेषः। एते चेत्यादि। पण्डितंमन्या विद्वन्मानिनो वेदान्तशास्त्रं व्याकुलयन्ति। वेदान्तशास्त्रतत्त्वमजानाना एव परान्मोहयन्तीत्यर्थः। इदानीमहंकारः सेवकवशात्स्वप्रागल्भ्यप्रकटनार्थं परान्दूषयितुं वेदान्तसिद्धं दूषयति—प्रत्यक्षेति। प्रत्यक्षादिप्रमाणसिद्धविरुद्धार्थाभिधायिनो वेदान्ता यदि शास्त्राणि स्युस्तर्हि बौद्धैः किमपराध्यते। प्रत्यक्षं नाम प्रतिविषयाध्यवसायः। साक्षात्कार इत्यर्थः। आदिशब्देनानुमानादिकं गृह्यते। प्रत्यक्षादिप्रमाणानां प्रमा यथार्थानुभवस्तया सिद्धोऽर्थः। प्रपञ्चसत्यत्वादिस्तद्विरुद्धोऽर्थस्तस्मिन्मिथ्यात्वादिस्तदभिदधति प्रतिपादयन्तीति तद्विरुद्धार्थाभिधायिनो वेदान्ताः शास्त्राणि यदि भवेयुः। बुद्धमुनिकृतानि शास्त्राणि बौद्धानि

सूक्ष्मा। दुर्विज्ञेयेत्यर्थः। एवं सति स्वस्थैः पण्डितानामस्माकं न किंचिद्विवेचनीयमस्तीति स्वस्थचित्तैः कथं स्थीयत इत्यर्थः ॥ ३ ॥ विलोक्य। शुद्धवैदिकानिति शेषः। अर्थावधारणाविधुरा अर्थनिश्चयरहिताः। पुनरन्यतो गत्वा विलोक्येति शेषः। भिक्षामात्रेति। भिक्षामात्रार्थं गृहीतं यतिव्रतं यैस्ते भिक्षामात्रं प्रयोजनं न मुक्तिः गृहीतयतिव्रता न तु यतय इत्यर्थः। मुण्डितं मुण्डं यैस्ते। न तु मुण्डितमनस इत्यर्थः। आत्मानं पण्डितं मन्यन्ते ते पण्डितंमन्याः। न तु पण्डिता इत्यर्थः ॥— प्रत्यक्षादीति। प्रत्यक्षादिप्रमासिद्धो योऽर्थस्तद्विरुद्धो योऽर्थः स्वर्गादिरूपस्तमभिदधतीत्येवंशीला वेदान्ता यदि शास्त्राणि तर्हि बौद्धैः किमपराध्यते। न किमपि

तदेतद्वाङ्मात्रश्रवणमपि गुरुतरदुरितोदयाय। (पुनरन्यतो गत्वा)
ते च शैवपाशुपतादयो दुरभ्यस्ताक्षपादमताः पशवः पाषण्डाः।
मीषां संभाषणादपि नरा नरकं यान्ति। तदेते दर्शनपथाद्दूरतः
रिहरणीयाः।

(पुनरन्यतो गत्वा) एते च—

गङ्गातीरतरङ्गशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः।

---

क्रमपराध्यते। मतद्वयस्य तुल्यत्वाद्वेदान्तशास्त्रादरः स्वाभिनिवेशमात्रादिति
वः॥ ४॥ **एते चेत्यादि।** शैवपाशुपतादयः शैवप्रधानं पाशुपतव्रतं येषां ते
वपाशुपताः। आदिशब्देन शाक्तपाशुपताः संगृह्यन्ते। दुरभ्यस्ताक्षपादमताः
क्षपादेन वेदप्रामाण्याङ्गीकारात्तत्प्रामाण्यप्रकारानभिज्ञानतया तदभ्यासो दुष्कर
ति भावः। पाशः प्रकृतिस्तेन बद्धो जीवः पशुस्तस्य पतिरीश्वरः। 'पश बन्धने'
त्यस्माद्धातोरौणादिकउप्रत्यये पशुशब्दो निष्पन्नः। प्राकृत उभयोः संबन्धः।
णवादिकं मलं तस्य प्रेरकः पतिरीश्वरः। स च जगत्कर्ता जगन्नियन्ता। का-
रूपप्रपञ्चः कर्तारं विना न सिध्यतीति काव्यलिङ्गानुमानसिद्धः। यथोक्तं वाय-
ीयसंहितायां वायुना—'पशुः पाशः पतिश्चेति कथ्यते तत्त्रयं क्रमात्। पाशः
कृतिरुद्दिष्टा पुरुषो मायया वृतः॥ संबन्धो मलकर्मभ्यां शिवः प्रेरक ईश्वरः।
स्ति कश्चिदपर्यन्तं(?) रमणीयगुणाश्रयः॥ पतिर्विश्वस्य निर्माता पशुपाशविल-
णः। अभावे तस्य विश्वस्य दृष्टिरेषा कथं भवेत्॥ अचेतनत्वादज्ञत्वादनयोः
शुपाशयोः। प्रधानपरिमाण्वादि यावत्किञ्चिदचेतनम्॥ न कर्तृत्वं स्वयं दृष्टं
द्धिमत्कारणं विना। जगच्च कर्तृतापेक्षं कार्यं सावयवं यतः॥ तस्मात्कार्यस्य
र्तृत्वं पत्युर्न पशुपाशयोः। पशोरपि च कर्तृत्वं पत्युः प्रेरणपूर्वकम्॥'
ति। अतश्च शैवपाशुपतयोर्हैतुकत्वाद्वेदस्यापि हैतुकतयैव प्रामाण्यानङ्गीकाराद्वेद-
ाह्यप्राया एव। अत उक्तं मनुना—'हैतुकाबद्धवृत्तिं च वाङ्मात्रेणापि नार्च-
त्' इति॥—**गङ्गातीरेत्यादि।** बृसीमासनम्। कुशमुष्टिमण्डितमहादण्डाः
शमुष्टिभिर्मण्डिता अलंकृता मुष्टिर्येषाम्। गृहीतकुशा इत्यर्थः। महान्पूज्य इ-

---

र्थः॥ ४॥—**तदेतैरिति।** वाङ्मिश्रणं वाचां मिश्रणम्। संभाषणमिति यावत्।
रितोदयाय पापोत्पत्तये दुःखेनाभ्यस्तमक्षपादमतं कणादशास्त्रं यैस्ते॥—**गङ्गातीरे-**
**त।** अहो इत्याश्चर्ये। दाम्भिका दम्भप्रधाना धनिनां वित्तानि हरन्ति। की-
शा दाम्भिकाः। गङ्गातीरे तरङ्गैः शीतला याः शिलास्तासु विन्यस्ताः प्रक्षिप्ता याः

---

१ 'वाङ्मिश्रणमपि' इति पाठः।

पर्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजग्रह-
व्यग्राग्राङ्गुलयो हरन्ति धनिनां वित्तान्यहो दाम्भिकाः ॥५॥

(पुनरन्यतो गत्वा) एते त्रिदण्डव्यपदेशजीविनो द्वैताद्वैतमार्गप भ्रष्टा एव । (अन्यतो गत्वा विलोक्य) अये, कस्यैतद्[1]द्वारोपान्त खातातिप्रांशुवंशकाण्डताण्डवितधौतसितसूक्ष्माम्बरसहस्रमितस्ततो विन्यस्तकृष्णाजिनदृषदुपलसमिच्चषालोलूखलमुसलमनवरतहुताज्य न्धिधूमश्यामलितगगनमण्डलममरसरितो नातिदूरे विभात्याश्र

त्यर्थः । दण्डो वैणवो येषां ते । विशेषणसमासः । करण्डोज्ज्वलाः करण्डैः मण्डलुभिरुज्ज्वलाः । तथाच स्मृतिः—'वेणुमान्सकमण्डलुः' इति । अथवा रण्डैर्देवतापेटिकादिभिरुज्ज्वलाः । पर्यायेत्यादि व्यक्तम् ॥५॥—**त्रिदण्डेत्या** त्रिदण्डव्यपदेशजीविनः । जीवितार्थमेव दण्डं धृतवन्त इत्यर्थः । न ज्ञानि अत एवाह द्वैताद्वैतमार्गपरिभ्रष्टाः । द्वितैव द्वैतं । स्वार्थेऽण् । वेदस्य पूर्वकाण्डो निबन्धः । उत्तरकाण्डस्त्वद्वैतनिबन्धः । त्रिदण्डिनो भट्टभास्करमतानुव संन्यासिनो भेदाभेदवादिनः । तेऽपि तत्प्रतिपादकवेदाभावादवैदिकप्राया ए भावः । **अये कस्यैतदित्यादि** । ताण्डवितं वायुवशाच्चलितम् । अमरस भागीरथ्या नातिदूरेऽतिनिकटे । नशब्देन सुप्सुपेति समासः । तदुक्तं वामनेन 'नैकशब्दः सुप्सुपेति समासात्' इति । यद्यपि गुरुणा दशमान्त्यपाद

भास्वन्त्यो बृस्य ऋषीणामासनानि तेषु संविष्टाः । पुनः कीदृशाः । कुशमु मण्डितः शोभितो महादण्डो बृहद्भुजदण्डो येषां ते । पुनः कीदृशाः । कर तवसनस्थापनोपयोगिवंशपात्रैरुज्ज्वलाः शोभमानाः । पुनः कीदृशाः । पर्या वृत्त्या ग्रथितं यदक्षसूत्रवलयं मणिमालारूपं तस्य प्रत्येकं बीजग्रहे मणिग्रहणे श्चञ्चला अग्राङ्गुलयो येषां ते तथा ॥ ५ ॥—**एतेचेति** । त्रिदण्डिव्यपदेशेन ण्डिच्छलेन जीविनो द्वैताद्वैतमार्गपरिभ्रष्टाः । भट्टभास्करमतावलम्बनादुभ इत्यर्थः । अहंकारो विचारयति । **अये कस्येदमिति** । अये इति संबोधनमहो इत इदं परिदृश्यमानममरसरितो देवनद्या गङ्गाया नातिदूरतः निकट एव कस्या पदं विभाति शोभते । कीदृशमाश्रमपदम् । द्वारोपान्ते द्वारनिकटभूमौ निखा रोपितमतिप्रांश्वत्युच्चं वंशकाण्डं तस्मिंस्ताण्डवितं नृत्यत् धौतं प्रक्षालितं सितं सूक्ष्मं च बहुमूल्यमम्बरसहस्रं वस्त्रसहस्रं यस्मिंस्तत् । पुनः कीदृशः । इतस्ततो

१ 'कस्येदं द्वारो' इति पाठः । २ 'दुपलञ्चमसचपालो' इति पाठः । ३ '... लीकृत' इति पाठः । ४ 'आश्रमपदम्' इति पाठः ।

ण्डलम् । नूनमिदं कस्यापि गृहमेधिनो गृहं भविष्यति । भवतु । क्तमस्माकमिति । पवित्रमेतद्द्वित्रिदिवसनिवासस्थानम् । (प्रवेशं ट्यति ) । (विलोक्य च ) अये,

मृद्बिन्दुलाञ्छितललाटभुजोदरोरः-
कण्ठोष्ठपृष्ठचुबुकोरुकपोलजानुः ।
चूडाग्रकर्णकटिपाणिविराजमान-
दर्भाङ्कुरः स्फुरति मूर्त इवैष दम्भः ॥ ६ ॥

भवतूपसर्पाम्येनम् । ( उपसृत्य ) कल्याणं भवतु भवताम् । म्भो हुंकारेण निवारति ।)

( प्रविशति बटुः ।)

**बटुः**—( ससंभ्रमम् ।) ब्रह्मन्, दूरत एव स्थीयताम् । यतः दौ प्रक्षाल्य एतदाश्रमपदं प्रवेष्टव्यम् ।

---

जेषु 'ये यजामहे' करोतीत्यत्र न समासो निषिद्धः । तथापि महाकविप्रयो- त्सिद्धः ॥ **द्वित्रिदिवसेति** । द्वित्रिदिवसनिवासस्थानमिति । द्वौ वा त्रयो द्वित्राः । 'सङ्ख्ययाव्यया–' इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ सङ्ख्येये' इति डच् । त्र संदेहोऽन्यपदार्थेति पदार्थमञ्जरीकारः । द्वित्रिदिवसेषु निवासस्थानमिति मासः ॥—**मृद्बिन्द्विति** । एष त्राणीभूतो(?) दम्भ इति प्रान्ते भातीत्यर्थः॥६॥ **कल्याणं भवत्वित्यादि** । हुंकारेण निवारयति । सर्वेषां नमस्कार्यं हानुभावं मां प्रति कथमाशीर्वाद इति कुपितवानित्यर्थः । इदमर्थमजानानो टुः ब्रह्मन् दूरत एव स्थीयतामित्यादि कथमस्माकं कुलं परीक्षितव्यमित्यन्तं

---

रतानि स्थापितानि कृष्णाजिनमारभ्य मुसलान्तानि यज्ञपात्राणि यस्मिंस्तत् । नः कीदृशः । अनवरतं निरन्तरं हुतस्याज्यस्य गन्धो यस्मिन्नेतादृशो यो धूमस्तेन यामलीकृतं श्यामीकृतं गगनमण्डलं यस्मिंस्तत् । नूनमिति । अदः इदं गृहमेधिनो हस्थस्य । दम्भमजानन्नाह—**मृद्बिन्द्विति** । एष दम्भो मूर्त इव मूर्तिमानिव फुरति मम प्रतिभाति । कीदृशः । मृद्बिन्दुभिर्मृन्निर्मितवर्तुलतिलकैर्लाञ्छितानि चि- तानि ललाटादीनि जान्वन्तानि यस्य सः । पुनः कीदृशः । चूडाग्रं शिखाग्रं त- स्मन्कर्णकटिपाणिषु च विराजमाना दर्भाङ्कुरा यस्य सः ॥ ६ ॥ भवतूपसर्पाम्येन-

---

१ 'नूनमदः' इति पाठः । २ 'निवासाय' इति पाठः ।

**अहंकारः**—( सक्रोधम् ) आः पाप, तुरुष्कदेशं प्राप्ताः स्म यत्र श्रोत्रियानतिथीनासनपाद्यादिभिरपि गृहिणो नोपतिष्ठन्ति ।

**दम्भः**—( हस्तसंज्ञया समाश्वासयति । )

**बटुः**—एवमाराध्यपादा आज्ञापयन्ति । दूरदेशादागतस्यार्य कुलशीलादिकं न सम्यगस्माकं वेदितव्यम् ।[1]

**अहंकारः**—आः कथमस्माकमपि कुलशीलादिकमिदानीं रीक्षितव्यम् । श्रूयताम्—

गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढापुरी
भूरिश्रेष्ठकनाम[2] धाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महाकुला न विदिताः कस्यात्र तेषामपि
प्रज्ञाशीलविवेकधैर्यविनयाचारैरहं चोत्तमः ॥ ७ ॥

( दम्भो बटुं पश्यति । )

**बटुः**—( ताम्रघटीं गृहीत्वा ) भगवन्, पादशौचं विधीयताम् ।

**अहंकारः**—( स्वगतम् ) भवतु । कोऽत्र विरोधः । एवं यते । ( तथा कृत्वोपसर्पति । )

---

स्पष्टम् ॥—**श्रूयतामित्यादि । गौडमिति** । भूरिश्रेष्ठकनामेत्यन्वर्थसंज्ञे भूरयः श्रेष्ठा महानुभावा यस्मिन्धामनीति । उत्तम उत्तमनामकः । अन्वर्थसं **महाकुला न विदिता इति ।** महाकुला न विदिताः । कस्येत्याक्षेपे । सर्व विदिता एवेत्यर्थः । तेषामपीति निर्धारणे षष्ठी । अहं चोत्तमः । अन्वर्थसंज्ञेयम् ॥ ७

---

मित्यारभ्य यत्र श्रोत्रियानित्यन्तं सुगमम् ॥—**यत्रेति ।** अतिथीननागतपूर्वान् त्रापि श्रोत्रियान् गृहिणो गृहस्था नोपतिष्ठन्ति न संमुखमायान्ति । बटुर्दम्भशि वदतीति शेषः॥—**गौडमिति ।** गौडं राष्ट्रं देशः अनुत्तमं न विद्यते उत्तमं त्तदनुत्तमम्, तत्रापि राढानगरी निरुपमा, तथापि राढापुर्यां भूरिश्रेष्ठिक नाम यस्य तस्य परमं धाम उत्कृष्टं गृहम् । अस्तीति शेषः । तत्र तस्मिन्धा ऽस्माकं पिता उत्तमः । उत्तमनामको वास्तीति शेषः । तत्पुत्रा म लाश्चात्र जगति कस्य न विदिताः । अपितु सर्वस्यैव विदिता इत्यर्थः । तेषां णामपि मध्येऽहं प्रज्ञा बुद्धिः, शीलं स्वभावः, विवेको विचारः, धैर्य धीरता, नयो नम्रता । आचारश्च एतैर्गुणैरुत्तमः सर्वोत्कृष्ट इत्यर्थः ॥ ७ ॥—दम्भ

---

१ 'विदितम्' इति पाठः । २ 'श्रेष्ठिक' इति पाठः ।

**दम्भः**—(दन्तान्संपीड्य[1] वटुं पश्यति ।)

**वटुः**—दूरे तावत्स्थीयताम् । वाताहताः प्रस्वेदकणिकाः प्रसरन्ति ।

**अहंकारः**—अहो, अपूर्वमिदं ब्राह्मण्यम् ।

**वटुः**—ब्रह्मन्, एवमेतत् । तथाहि—

अस्पृष्टचरणा ह्यस्य[2] चूडामणिमरीचिभिः ।
नीराजयन्ति भूपालाः पादपीठान्तभूतलम् ॥ ८ ॥

**अहंकारः**—(स्वगतम्) अये, दम्भग्राह्योऽयं देशः[3] । (प्रकाशम्) भवतु । अस्मिन्नासने उपविशामि । (तथा कर्तुमिच्छति ।)

**वटुः**—मैवम्[4] । नाराध्यपादानामन्यैरासनमाक्रम्यते ।

**अहंकारः**—आः पाप, अस्माभिरपि दक्षिणराढाप्रदेशप्रसिद्ध[5]-शुद्धिभिर्नाक्रमणीयमिदमासनम् । शृणु रे मूर्ख,

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां पुन-
र्व्यूढा काचन कन्यका खलु मया तेनास्मि ताताधिकः ।

---

...दयतीत्यारभ्यैवमेवेत्यन्तं स्पष्टम् । **तथाहीत्यादि** । यस्य मद्गुरोः पादपीठान्तर्भूतलं भूपाला अस्पृष्टचरणाः सन्तः पादपीठसमीपभूतलमेव चूडामणिमरीचिभिर्नीराजयन्तीत्यन्वयः ॥ ८ ॥ अहंकार इत्यारभ्य आः पापेत्यन्तं स्पष्टम् ॥—**नास्माकं जननीत्यादि** । तथोज्ज्वलकुला । यथा कन्योज्ज्वलकुला मया व्यूढा तथा मातोज्ज्वलकुला न भवति । तेन कारणेन ताताधिकोऽस्मि पितरम-

...भ्य तथा हीत्यन्तं निगदव्याख्यानम् । अहो इत्युपहासोक्तिः । अपूर्वमिदं ब्राह्मण्यम् ॥—**अस्पृष्टेति** । हि निश्चितं भूपालाः राजानोऽस्य दम्भस्य पादपीठस्यान्तेऽवसाने निकटे भूतलं चूडामणिमरीचिभिर्मुकुटमाणिक्यरश्मिभिर्नीराजयन्त्याराति-क्यक्रिययोपचरन्ति । कीदृशा भूमिपालाः । अस्पृष्टचरणाः न स्पृष्टौ चरणौ यैस्ते । चरणस्पर्शरहिता इत्यर्थः । एतेन राजपूजानिबन्धनमेव ब्राह्मण्यम् न विद्यातपोव्रतैर्दाम्भिकानामिति भावः ॥ ८ ॥ अहंकार इत्यारभ्य शृणु रे मूर्खेत्यन्तं सुबोधम् । सुबोधमध्ये परेषामासनोपवेशेनाहंकारोत्यनाचारीति नैवमाराध्यपादानामित्यनेन ध्वनितम् ॥—**नास्माकमिति** । अस्माकं जननी माता तथोज्ज्वलकुलोत्कृष्टकुला

---

१ 'पीडयित्वा । दूरे' इति पाठः । २ 'यस्य' इति पाठः । ३ 'देशः । भवतु' इति पाठः । ४ 'नैवमाराध्यपादानामासनमन्यैराक्रम्यते' इति पाठः । ५ 'राढाप्रसिद्धशुद्धिभिर्नाक्रमणीयं' इति पाठः ।

अस्मच्छ्यालक[1]भागिनेयदुहिता मिथ्याभिशप्ता यत-
स्तत्संपर्कवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥ ९

**दम्भः**—ब्रह्मन्, यद्यप्येवं तथाप्यस्माकमविदितवृत्तान्तो वान्। तथाहि—

सदनमुपगतोऽहं पूर्वमम्भोजयोनेः
सपदि मुनिभिरुच्चैरासनेष्वूज्झितेषु।
सशपथमनुनीय ब्रह्मणा गोमयाम्भः-
परिमृजितनिजोरावाशु संवेशितोऽस्मि ॥ १० ॥

**अहंकारः**—(स्वगतम्) अहो, दाम्भिकस्य ब्राह्मणस्यात्युक्ति। (विचिन्त्य) अथवा दम्भस्यैव भवत्वेवं तावत्। ([2]प्रकाशम्) किमेवं गर्वायसे। (सक्रोधम्)

---

तिक्रान्तोऽस्मि ॥—**यत इत्यादि**। अस्मच्छालकभागिनेयत्वं यद्यपि स्वपुत्रे तथापि दूरसंबन्धप्रतिपादनपरत्वाद्वाक्यस्य भागिनेयशब्देन सपत्नीभागिनेयो क्षितः ॥ ९ ॥ यद्येवमित्यर्धाङ्गीकारः ॥ १० ॥ अहो ब्राह्मणस्य दाम्भिकस्यात्यु दाम्भिकस्य दम्भोपजीविनोऽथवा दम्भोऽयमिति। मूर्तो दम्भ इत्यर्थः। आः **किमेवमित्यादि**। गर्वायसे गर्ववानिवाचरसि। 'कर्तुः क्यङ् सलोपश्च

---

न, मया पुनः समीचीनश्रोत्रियाणां कन्या व्यूढा परिणीता। तेन कारणेनाहं धिकः पित्रधिकः। 'उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेद्बुधः' इति स्मरणात्संब मुत्तमत्वम्। आचारातिशयं दर्शयति। अस्माकं श्यालकोऽस्मच्छालकस्तस्य तस्य मातुलो मातुर्भ्राता तस्य सुता कन्या सा यतो हेतोर्मिथ्याभिशप्ता मिथ्या पयुक्ता तत्संपर्कवशात्परंपरासंबन्धान्मया प्रेयस्यपि प्रेमास्पदमपि स्वगृहिणी प्रो ताऽत्यन्तं त्यक्ता ॥ ९ ॥ **सदनमिति**। अहं पूर्वमम्भोजयोनेर्हिरण्यगर्भस्य गृहं प्रत्युपगतः। ब्रह्मणा हिरण्यगर्भेण गोमयाम्भःपरिमृजितनिजोरौ गोमययु म्भसा जलेन परि समन्तान्मृजितः शोधितो निजः स्वीय ऊरुरङ्कस्तस्मिन्सशपथं स्यात्तथानुनीय मानयित्वोपवेशितः। केषु सत्सु। उच्चैरतिशयेन मुनिभिः तत्क्षण एव आसनेषूज्झितेषु त्यक्तेषु सत्सु। एतेन हिरण्यगर्भस्यापि वयं मान्याः

---

१ 'श्यालकमित्रमातुलसुता' इति पाठः। २ 'सक्रोधं प्रकाशम्' इति पाठः

अरे क इव वासवः कथय कोऽत्र पद्मोद्भवो
वद प्रभवभूमयो जगति का मुनीनामपि ।
अवेहि तपसो बलं मम पुरन्दराणां शतं
शतं च परमेष्ठिनां पततु वा मुनीनां शतम् ॥ ११ ॥

**दम्भः**—(विलोक्य । सानन्दम्) अये, आर्यः पितामहोऽस्माक-
ंकारः । आर्य, दम्भो लोभात्मजोऽहं भो अभिवादये ।

**अहंकारः**—वत्स, आयुष्मान्भव । बालः खल्वसि मया द्वा-
रान्ते दृष्टः । संप्रति चिरकालविप्रकर्षाद्वार्धक्यग्रस्ततया च न स-
क्प्रत्यभिजानामि । अथ त्वत्कुमारस्यानृतस्य कुशलम् ? ।

---

ङ् । 'विन्मतोर्लुक्' इति लुक् ॥—**अरे क इवेत्यादि** । अरे दम्भ, ब्र-
गः संभावितोऽहमिति वदसि सोऽपि ब्रह्मा कोनु वद । वासवो ऋषिसङ्घजुष्टः
इव । मुनीनां प्रभवभूमयो जन्मस्थानानि । वसिष्ठादीनामुत्पत्त्यादीनीति
निः । काः कीदृशीर्वद । तृणीकृतब्रह्मपुरंदरस्य मम पुरतः के वा भवादृशाः
टाः सन्ति । मम तपसो बलमवेहि । येन तपसो बलेन तव पुरतः पुरंदराणां
तं, परमेष्ठिनां शतं, मुनीनां शतं पततु स्थानाच्च्यवताम् । संप्रश्ने लोट् । शत-
ति बहुसंख्योपलक्षणम् । असंख्याकान्पुरन्दरादीन्निर्मातुं पातयितुं वा शक्तस्य
म पुरो ब्रह्मणा संभावित इति किमेवं गर्वायसे ॥ ११ ॥ **विलोक्य सान-
दमित्यादि** । अये इति संबोधनम् । **लोभात्मज इति** । लोभमूलो दम्भ
त्यर्थः । द्वापारान्ते कलियुगादावित्यर्थः । अथेति प्रश्ने । यद्यपि प्रमादालस्यवि-

---

नर्मानुपाणामिति व्यज्यते ॥ १० ॥ मत्तपोविजृम्भितमिदमित्याहाहंकारः—**अरे
इति** । अरे इति नीचसंबोधने । वासवः शतक्रतुः क इव । न कोऽपीत्यर्थः ।
हल्यागामित्वादिति ध्वनितम् । अत्र जगति पद्मोद्भवो ब्रह्मा क इति कथय । स्वक-
गामित्वादिति तात्पर्यम् । जगति ऋषीणामपि[1] मन्त्रद्रष्टृणामपि प्रभवभूमय उत्प-
भूमयः काः कथय । अनेन धीवरकन्यातो व्यासः, कुम्भसंभवोऽगस्त्यः, हरि-
ऋष्यशृङ्गी, एवमादीन्युत्पत्तिस्थानानीति ध्वनितम् । ईदृशं मम तपसः साम-
मस्तीत्याह—**अवेहीति** । मम तपसो बलमवेहि जानीहि । किं तत्तदाह । पुरंद-
णामिन्द्राणां, परमेष्ठिनां ब्रह्मणां, मुनीनां मननशीलानां प्रत्येकं शतं पततु । म-
पःसामर्थ्यात्सर्वमाहंकारिकमिति भावः ॥ ११ ॥ **अहंकार इति** ।[2] वदतीति
पः । चिरकालविप्रकर्षाद्बहुकालविलम्बान्न सम्यक् प्रत्यभिजानामि न परिचि-

---

१ 'ऋषीणामपि' इति पाठः । २ 'पितामहोऽयम्' इति पाठः ।

**दम्भः**—अथ किम् । सोऽप्यत्रैव महामोहस्याज्ञया वर्तते नहि तेन विना मुहूर्तमप्यहं प्रभवामि[1] ।

**अहंकारः**—अथ तव मातापितरौ तृष्णालोभावपि कुशलौ

**दम्भः**—तावपि राज्ञो महामोहस्याज्ञयाऽत्रैव वर्तेते[2] । [त]र्विना क्षणमपि न तिष्ठामि । आर्यमिश्रैः पुनः[3] केन प्रयोजने[न] प्रसादः कृतः ।

**अहंकारः**—वत्स, मया महामोहस्य विवेकसकाशादत्या[हितं] श्रुतम् । तेन तद्वृत्तान्तं प्रत्येतुमागतोऽस्मि ।

**दम्भः**—स्वागतमेवार्यस्य[4] । यतो महाराजस्यापीन्द्रलोका[द्]गमनं श्रूयते । अस्ति च किंवदन्ती यद्देवेन वाराणसी[5] राज[धानी] वस्तुं निरूपितेति ।

प्रलिप्सामूलमनृतं तथापि विप्रलिप्साया दम्भकलत्रत्वात्तत्कुमारत्वम[नृ]ऽनृतस्य युज्यते । अथ किमिति सर्वथाङ्गीकारे । **अथ तवेत्यादि** । माता[पितरौ] तृष्णालोभाविति । तृष्णा नाम यावदीप्सितद्रव्यप्राप्तौ सत्यामपि पुन[र]ऽधिकद्रव्याकाङ्क्षा । लोभो नाम स्वद्रव्यापरित्यागपूर्वं परद्रव्यजिघृक्षा । [ए]... सत्यधिकद्रव्याकाङ्क्षारूपायाः लोभस्यार्धशरीरत्वात्पत्नीत्वव्यपदेशः । **आर्यै-रिति** । आर्यशब्दः श्रेष्ठवचनः । मिश्रशब्दः षड्दर्शनपारदृश्ववचनः । [बहुव]चनं पूजायाम् । पुनरिति वाक्यालंकारे । केन प्रयोजनेन किंप्रयोजनमु[द्दिश्य] प्रसादः कृतः समाहितः । अथ विन्दुमुपक्षिपति—**वत्सेत्यादि** । विन्दु[र्ना]मङ्कादावुक्तम्—'अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्' इत्यादि । [अत्र] दम्भाहंकारयोः संवादेन कथाविच्छेदे पुनरविच्छेदहेतुर्महामोहस्य विवे[कसका]शादत्याहितं श्रुतमिति पुनः कथानुसरणरूपो विन्दुः ॥ **स्वागतमित्या[दि]** । सुष्ठु आगतं स्वागतम् । आर्यस्य पूज्यस्य । कर्तरि षष्ठी । **यत इत्यादि** ।

नोमि । अथेत्यादिः प्रसादः कृत इत्यन्तो ग्रन्थः स्पष्टार्थः । वत्स, मयेति । ...तम् । अत्यनिष्टमित्यर्थः । तद्वृत्तान्तं महामोहसमाचारं प्रत्येतुं ज्ञातुम् । स्वा[गतमिति] सुष्ठ्वेवागतम् । राजधानी राजानो धीयन्ते वसन्त्यस्यामिति राजधानी राजवस[ति]मापि सैव वसतिस्थलमिति निरूपिता विचारिता । तत्रैवावस्थातव्यमिति ...

१ 'जीवामि' इति पाठः । २ 'तावप्यत्रैव वर्तेते । तयोर्विना' इति ... ३ 'पुनरत्र' इति पाठः । ४ 'तर्हि स्वागतम्' इति पाठः । ५ 'वाराणसी नगरी राजधानी निरूपितेति' इति पाठः ।

**अहंकारः**—पुंनः[1] किं वाराणस्यां सर्वात्मना मोहस्यावस्थान[2]-रणमिति ।

**दम्भः**—आर्य, ननु विवेकोपरोध एव । तथाहि—

विद्याप्रबोधोदयजन्मभूमिर्वाराणसी ब्रह्मपुरी निरत्यया[3] ।
असौ[4] कुलोच्छेदविधिं चिकीर्षुर्निर्वस्तुमत्रेच्छति नित्यमेवम् १२

**अहंकारः**—(सभयम्) यद्यप्येवमशक्यप्रतीकार एवायमर्थः ।

---

य महामोहस्येन्द्रलोकात्स्वर्गेऽपि महामोहाविष्ट इत्यर्थः । महामोहो नाम वि-ष्वासक्तिविशेषहेतुरहंममाभिमानः । तदुक्तं साङ्ख्यवाचस्पतौ—'अविद्या-तारागद्वेषाभिनिवेशाः पञ्च यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामि-संज्ञकाः । यद्यपि शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेष्वनुरक्ति-तया दशविधो महामोहस्तथापि विषयभेदाद्दशविध एव प्रतीयते । वस्तु-त्वेक एवेत्यवधारणीयम् ॥—**आर्य नन्वित्यादि** । विवेकोपरोधो विवेक-स्य उपरोधो निरोधनम् । हिंसनमिति यावत् । **तथाहीत्यादि । विद्येति ।** ब्रह्मपुरी ब्रह्मोपदेशप्राप्तिहेतुर्निरत्यया निद्रा-प्रलयकालेऽप्यविनाशिनी । कुलच्छेद-विधिं चिकीर्षुः कर्तुमिच्छुः । असौ विवेक इत्यर्थः । विवेकोपरोध इति समासे गुणीभूतस्यापि विवेकस्यादःशब्देन सर्वनाम्ना परामर्शो युज्यते । तदुक्तं वाम-नेन—'सर्वनाम्नानुसन्धिनिर्वृत्तिश्छिन्नस्य' इति ॥ १२ ॥ **यद्येवमित्यादि** । अश-क्यप्रतीकार इति । ज्ञानिनामज्ञानिनां चाविशेषेण मुक्तिप्रदत्वाद्वाराणस्या इत्यर्थः ।

---

विवेकस्यापरोधः प्रविघातः । विवेकोपरोधस्त्वावश्यको यतस्तस्यां निरन्तरं निवास-मिच्छति वाराणस्यामित्याह । **तथाहीति** । वाराणसीवासयोग्यो विवेक एवेत्याह— **विद्येति** । स विवेकः । अतो हेतोरत्र वाराणस्यां नित्यमेव सर्वदैव निवस्तुं नितरां वासं कर्तुमिच्छति । कीदृशो विवेकः । कुलोच्छेदविधिं कुलोच्छेदेतिकर्तव्यतां वि-धित्सुश्चिकीर्षुः । अतः कुतः यतः दुरत्यया अविनाशा ब्रह्मपुरी शिवनगरी । ब्रह्म-शब्दः शिववचनः । उक्तं च 'ब्रह्म ज्ञानं प्रधानं च क्षेत्रज्ञोङ्कारबुद्धयः । मोक्षो हिरण्यगर्भश्च मन्त्रो वेदः शिवस्तथा ॥' इति । कीदृशी वाराणसी । विद्याप्रबोधोदय-जन्मभूमिः विद्या च प्रबोधश्च तयोरुदयः तस्य जन्मभूमिः, विद्या ब्रह्माकारान्तःक-रणवृत्तिस्तद्वृत्त्युपहितं चैतन्यं प्रबोधः तयोर्जन्मभूमिरित्यर्थः ॥ १२ ॥ **यद्येवमिति ।** यदि एवम् । एवंविधा वाराणसीति शेषः । तर्हि अयमर्थोऽशक्यप्रतीकार इति यो-

---

१ 'किं पुनः कारणं' इति पाठः । २ 'महामोहस्य' इति पाठः । ३ 'दुर-त्यया' इति पाठः । ४ 'अयं कुलोच्छेदविधिं विधित्सुः' इति पाठः ।

यतः—

परममविदुषां पदं नराणां पुरविजयी करुणाविधेयचेताः ।
कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधम् ॥१

तदेवाह—**परममविदुषामित्यादि** । परमं पदं ब्रह्मस्वरूपम् । 'तद्विष्णोः पदम्', 'विष्णोः पदे परमे मध्व उत्सः', 'विश्वं नारायणं देवमक्षरं परमं प इत्यादिश्रुतिभ्यः परमपदस्य ब्रह्मस्वरूपत्वावगमात् । अविदुषामजानताम् लोका–' इत्यादिना षष्ठीनिषेधाद्द्वितीया । नराणाम् । अत्र नरशब्दो जन्तुम परः । पुरविजयी त्रिपुरान्तको रुद्रः । यद्वा पुरेषु लिङ्गशरीरेषु विजयवा शमानः पुरुषो रुद्रः । यद्वा पुराणां विजयोऽस्यास्तीति पुरापुरादिवर्ति सा तन्यं विश्वेश्वरशब्दवाच्यः । करुणाविधेयचेताः करुणायाः परदुःखप्रहाणेच विधेयमधीनं चेतश्चित्तं यस्य सः । कथयत्युपदिशति । भगवान् । भग नान्तादिवर्णलोपाभ्यां भवयोगौ विवक्षितौ । भशब्देन भवः । गशब्देन यो एवं च सति भगौ हेयत्वेन देयत्वेन च यस्य स्त इति भगवान् । भवं नि योगं ददाति स भगवानित्यर्थः । तथा च । अथर्वशिखोपनिषदि—'अथ क च्यते भगवानिति यस्मादुच्चार्यमाण एको रुद्रः भवं निहत्य योगं ददाति त दुच्यते भगवानिति' । इह काश्यामन्तकाले मुमूर्षावस्थायां भवभयकातरत भवः संसारस्तस्माद्भयम् । जन्ममरणाभ्यां भीतिरित्यर्थः । तेन कातरः का कस्तस्य लोकस्य तारकं तरणहेतुः प्रबोधः । अन्वर्थसंज्ञेयम् । प्रबुध्यतेऽनेन ब्र रूपमिति प्रबोधस्तम् । अत्रेत्थं पदयोजना । इह काश्यां करुणाविधेय भगवान्पुरविजयी परमं पदमविदुषां नराणां प्रबोधं भवभयकातरतारकं काले कथयति । तथा चाथर्वणी श्रुतिः—मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि स्वयम् । उपदेक्ष्यसि तं मन्त्रं स मुक्तो भविता शिव ॥' इति । श्रीरामवाक्यमे स्मृतिरपि—'मुमूर्षोर्मणिकर्ण्यन्तरर्धोदकनिवासिनः । अहं दिशामि ते तारकं ब्रह्मसंज्ञकम् ॥' इति । तथा काशीखण्डे पञ्चमाध्यायेऽपि—'सहोवाच बालिमुनिस्त्वसिरिला मताः । वरणा पिङ्गलानाडी तदन्तरविमुक्तकम् ॥ सुषुम्ना परा नाडीत्येवं वाराणसी त्वसौ । तदत्रोत्क्रमणे सर्वजन्तूनां हि

जना । अशक्यप्रतीकारत्वे कारणमाह—**यतः—परममिति** । इह वाराणस्यां विजयी श्रीमहादेवः भगवान् षड्गुणैश्वर्यसंपन्नो नराणां जीवानामन्तकाले प्रा मणसमये भवः संसारस्तस्माद्भयं तेन कातरा भीतास्तांस्तारयतीति तारकः तं प्र ब्रह्मैकत्वलक्षणं कथयति प्रकाशयति । कथंभूतानां नराणाम् । परमं पदं स्थानमविदुषाम् । यद्वा परमं ब्रह्म पद्यते प्राप्यते तत्पदं ब्रह्मप्राप्तिस्थानमविदुषा नताम् । कीदृशो महादेवः । करुणया विधेयं प्रवर्तनीयं चेतो यस्य सः ॥ १३ ॥

**दम्भः**—सत्यमेतत्तथापि नैतत्कामक्रोधाभिभूतानां संभाव्यते । था ह्युदाहरन्ति तैर्थिकाः—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च तीर्थं च स तीर्थफलमश्नुते ॥ १४ ॥

ः ॥ तारकं ब्रह्म आचष्टे तेन ब्रह्म भवन्ति हि । एवं लोका वदन्त्येवं तमाहु-ह्मवादिनः ॥ भगवानन्तकालेऽत्र तारकस्योपदेशतः । अविमुक्तस्थिताञ्जन्तून्मो-येन्नात्र संशयः ॥' इति । एतदुक्तं भवति । काश्यां मरणं जन्तुमात्रसाधारण्येन क्तिहेतुरिति ॥ १३ ॥ उक्तेऽर्थेऽर्धमङ्गीकरोति—**सत्यमेतदिति** । भगवान् र्वसाधारण्येनान्तकाले तारकमुपदिशतीत्येतच्छब्दार्थः । तारकमुपदिशतीत्यङ्गी-ारांशः । साधारण्येऽप्यङ्गीकारांशं प्रतिपादयितुमुपक्रमते । तथापीत्यादिना । काम-ोधाद्युपहतचित्तानामेतद्भगवान्सर्वसाधारण्येनोपदेशं करोतीत्येतन्न संभाव्यते । त इति तत्राह—तत्राप्युदाहरन्तीति । मुनय इति शेषः ॥—**यस्येति** ॥ स्य जनस्य पादौ चरणौ सुसंयतौ निषिद्धसंचारपराङ्मुखौ । सुसंयतमित्यादि पाद-स्तयोर्विभक्तिलिङ्गविपरिणामेनान्वयः कर्तव्यः । पादौ सुसंयतौ हस्तौ सुसंयतौ ति । दम्भरहितः पुरुषो विद्या ज्ञानं, तपः कृच्छ्रचान्द्रायणादिकम्, तीर्थं यो-नेरुपस्थः । सुसंयत इत्यन्वयः । स तीर्थफलं काशीतीर्थफलं यस्मिंस्तीर्थे त्फलमुपदिष्टं तत्फलमश्नुते प्राप्नोति । अस्य सामान्यशास्त्रस्य विशेषशास्त्रेणैका-र्थात्काश्यां संयतेन्द्रियाणामेव तीर्थफलप्राप्तिर्नान्येषाम् । तथा चोक्तं का-ीखण्ड उत्तरभागे षण्णवतितमेऽध्याये कृच्छ्रचान्द्रायणादितपांस्युक्त्वा—अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धि-र्ज्ञानेन शुध्यति ॥ तच्च ज्ञानं भवेत्पुंसां सम्यक्काशीनिषेवणात् । काशीनिषेवणा-त्स्माद्विश्वेशे करुणोदयः । ततो महोदयावाप्तिः कर्मनिर्मूलनक्षमा ॥ ततः ाश्यां प्रयत्नेन स्नानं दानं तपो जपः । व्रतं पुराणश्रवणं स्मृत्युक्ताध्वनि-वणम् ॥ प्रतिक्षणं प्रतिदिनं विश्वेशपदचिन्तनम् । साधुभिः सह संवासो ल्पः शिवशिवेति च ॥ आस्तिक्यबुद्धिर्विनयो मानामानसमानधीः । अकामता-नौद्धत्यमरागित्वमहिंसनम् ॥ अप्रतिग्रहवृत्तिश्च मतिश्चानुग्रहात्मिका । अद-म्भत्वममात्सर्यमप्रार्थितधनागमः ॥ अलोभित्वमनालस्यमपारुष्यमदीनता ।

**त्यमेतदिति** । यद्यपि शंकरः सच्चिदानन्दवाक्यार्थरूपं ब्रह्म वाराणस्यां प्रकाशय-ीति सत्यं तथापीत्यग्रेतनेन योजनीयम् । तैर्थिकाः वैदिकाः किमुदाहरन्ति त-ाह—**यस्येति** । यस्य हस्तौ पादौ सुसंयतौ पारमेश्वरमेव कार्यं कुर्वाणौ न तु

१ 'तपश्च कीर्तिश्च' इति पाठः ।

इत्यादि तत्प्रवृत्तिश्च कर्तव्या क्षेत्रवासिना ॥' इति । तथा तत्रैव—'प्रतिग्रहा वृत्तः संतुष्टो येन केनचित् । अहंकारविमुक्तश्च स तीर्थफलमश्नुते ॥ अदा निरालम्बो लघ्वाहारो जितेन्द्रियः । विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नु अकोपनोऽमलमतिः सत्यवादी दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफ श्नुते ॥ तीर्थान्यनुसरन्धीरः श्रद्दधानः समाहितः । कृतपापो विशुध्येत किं शुद्धकर्मसु ॥ तिर्यग्योनिं न वै गच्छेत्कुदेशे न च जायते । न दुःखी स्या र्गभाक्च मोक्षोपायं च विन्दति ॥ अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्न शयः । हेतुनष्टश्च पञ्चैते न तीर्थफलभागिनः' ॥ असंयतेन्द्रियाणां पापकृ मन्यत्र स्थितानां काश्यां पापक्षयः । 'अन्यत्र यत्कृतं पापं तत्काश्यां च श्यति । वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति ॥ अन्तर्गेहकृतं पापं पै रकावहम् । पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि ॥ न कल्पकोटिभिः क्ष कृतं कर्म प्रणश्यति । किंतु रुद्रपिशाचत्वं जायते त्वयुतत्रयम् ॥ वारा स्थितो यो वै कामरोषरतः सदा । योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम् पुनस्तत्रैव निवसञ्ज्ञानं प्राप्नोत्यनुत्तमम् । तेन ज्ञानेन संपन्नो मोक्षं प्रा नुत्तमम् ॥ दुष्कृतानि विधायेह पुनः पञ्चत्वमागताः । तेषां गतिं प्रव शृणुत द्विजसत्तमाः ॥ विवस्त्राः क्षुत्पिपासाभिर्लग्नपृष्ठोदरत्वचः । अन्यै रु चैश्च सह तान्योजयेत्पतिः ॥' अत्र कालराजेत्यनुषज्यते । 'ततो रुद्रपिशा भैरवानुचरास्तदा । सदन्नकाममत्यर्थं(?)क्षत्रिये मूत्रसंभवम् । आहारं न्मिश्रं नैव भक्तं कदाचन । एवं त्वयुतसंख्यातं कालं ते भ्रान्तदुःखि स्मशानस्तम्भमहिता नीयन्ते कण्ठपाशिताः ॥ पिपासिता अपि न ते स्पर्शमवाप्नुयुः । अथ संक्षीणपापास्ते कालभैरवदर्शनात् ॥ इहैव देहिनो मुच्यन्ते ते ममाज्ञया । तस्मान्न कामयेतात्र वाङ्मनःकर्मणाप्यघम् ॥ पथि समास्थेयं महालाभमभीप्सुभिः ॥' इति । अनेन वाराणस्यां पापकृ मरणानन्तरं रुद्रपिशाचयातनाप्राप्तिस्तदनन्तरं मुक्तिरित्युक्तम् । स मुक्तिः 'ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुतिभ्यो भगवांस्तारकमुपदि भगवच्छब्दार्थपर्यालोचनया परमगुरूपदेशवशादेव मुक्तिरिति विज्ञायते त्रमहिम्नैव मरणान्मुक्तिरित्युक्तौ तारकोपदेशो व्यर्थः स्यात् । न च ' मुक्तो मृतः कश्चिन्नरकं याति किल्विषी । ममानुग्रहमासाद्य गच्छत्येव प तिम् ॥' इति । नात्र मरणादेव मुक्तिः प्रदीयत इति वाच्यम् । ममानु साद्येत्यनेन ज्ञानप्रदानरूपानुग्रहस्यैव परमपदगमनस्य हेतुत्वावगमात् ।

ब्राह्मणताडनादि । मनश्च सुसंयतमेव कामानासक्तमेव । विद्या तत्तीर्थमाहा ज्ञानं । तपश्चान्द्रायणादि । कीर्तिर्दानादिना । एवं यः करोति स तीर्थफल

**दम्भः**—(नेपथ्ये) [1]भो भोः पौराः, एष खलु संप्राप्तो देवो हामोहः । तेन,

ष्यन्दैश्चन्दनानां स्फटिकमणिशिलावेदिकाः संस्क्रियन्तां
[2]मुच्यन्तां यन्त्रमार्गाः प्रचरतु परितो वारिधारा गृहेषु ।

राणस्यां मृतस्य च' इत्यादयः स्मृतयो ज्ञानेनैव मुक्तिरिति प्रतिपादनपरा ति न काचित्क्षतिः । काश्यामपि कैवल्यमुक्तेरेव प्रतिपादनाज्जीवन्मुक्ति-तिपादकं शास्त्रमर्थवादः । तथा चोक्तं संक्षेपशारीरके—'जीवन्मुक्तिप्रलयं स्त्रजातं जीवन्मुक्तिः कल्पितं योजनीयम्' इति चेत् । तन्न । 'भूयश्चान्ते वि-मायानिवृत्तिः' इत्यादिश्रुतिभ्यो जीवन्मुक्तिप्रतिपादनात् । जीवन्मुक्तेः स्वा-भवैकवेद्यत्वाच्च । एतच्च षष्ठाङ्के निरूपयिष्यामः । तथा च काशीखण्डे—'इह वाराण्युपताः शुद्धा आकल्पब्रह्मचारिणः । जितेन्द्रियास्तपोनिष्ठास्तत्त्वार्थज्ञाननि-त्रला: ॥ कन्दमूलफलाहाराः परतत्त्वार्पितेक्षणाः । सत्यवन्तो जितक्रोधा नि-हा निष्प्रतिग्रहाः । निर्द्वन्द्वा निश्चयार्थाश्च निरहंकारवृत्तयः । ते देवतामयात्मानो च्चित्ता मत्स्वरूपिणः ॥ एते पूज्या नमस्याश्च मद्बुद्ध्या मत्परायणैः ॥' इति । श्यां जीवन्मुक्तिरप्यस्तीति ध्येयम् । अयमत्र दम्भाशयः । आगन्तूञ्जनान्का-दीन्प्रयुज्य निर्गमयिष्यामः । तत्र स्थितान्रुद्रयातनादिकं प्रवेशयिष्यामः । वन्मुक्तान् मधुमति(?)विद्यया योगाद्भ्रंशयिष्याम इत्यलमतिविस्तरेण । अत्र लासो नाम प्रतिमुखसन्धेः प्रथममङ्गम् । नष्टदृष्टार्थरूपबीजस्य समीहात्मतया र्णनात् । तदुक्तम्—'दृष्टार्थविषयामीहां विलासं परिचक्षते' इति ॥ इतः परं पथ्योक्तिलक्षणेनोपसंधिनाङ्कपात्रप्रवेशः । यद्वा चूलिकया पात्रप्रवेशः । तदुक्तम् पथ्याङ्कगतैः पात्रैश्चूलिका कार्यसूचना । यद्वा प्रवेशकेनैव अङ्गपात्रप्रवेशकः ॥' ति ॥ १४ ॥—**निष्यन्दैरित्यादि**। धारागृहेषु धाराप्रधानेषु हर्म्येषु । यन्त्रमार्गा च्यन्ताम् । जलप्रस्रवणार्हाः क्रियन्तामित्यर्थः । तत्र वारि प्रसरतु । हर्म्येषु

प्नोति ॥ १४ ॥ राज्ञामागमने यान्यपेक्षितानि लोके तान्याह—**निष्यन्दैरिति**। न्दनानां निष्यन्दैः सेकैः स्फटिकाश्च मणयश्च त एव शिला यासु तादृश्यो वे-काः स्फटिकरत्ननिर्मितानि चत्वराणि संस्क्रियन्तां परिष्क्रियन्ताम् । यन्त्रमार्गा लयन्त्रद्वाराणि क्रीडार्थमापणेषु रचितानि मोच्यन्तामुद्घाट्यन्ताम् । अनेनापणश्र-रो ध्वन्यते । वारिधारा जलधारा गृहेषु परित इतस्ततः प्रसरतु । नगरालंका-ऽनेन सूचितः । स्फुरन्तो दीप्तिमन्त उरवः स्थूला मणयो यासु तादृश्यस्तो-गानां श्रेणयः पङ्क्तयः समन्ताच्चतुर्दिक्षूच्छ्रीयन्तामुच्चैर्बध्यन्ताम् । अनेन राजगृ-

१ 'भोभो जनाः' इति पाठः । २ 'मोच्यन्तां' इति पाठः ।

उच्छ्रीयन्तां समन्तात्स्फुरदुरुमणयः श्रेणयस्तोरणानां
धूयन्तां सौधमूर्धस्वमरपतिधनुर्धामचित्राः पताकाः ॥ १५ ॥

**दम्भः**—आर्य, प्रत्यासन्नोऽयं महाराजः। तत्प्रत्युद्गमनेन
भाव्यतामार्येण।

**अहंकारः**—एवं भवतु। (निष्क्रान्तौ)

(प्रवेशकः।)

(ततः प्रविशति महामोहो विभवतश्च परिवारः[1]।)

**महामोहः**—अहो, (विहस्य) अहो, निरङ्कुशा जडधियः।
आत्मास्ति देह[2]व्यतिरिक्तमूर्तिर्भोक्ता स लोकान्तरितः फलानां
आशेयमाकाशतरोः प्रसूनात्प्रथीयसः[3] स्वादुफलप्रसूतौ ॥ १६ ॥

---

प्रसारिता मुक्ताः स्रज इव प्रसरन्त्वित्यर्थः ॥ १५ ॥ **प्रवेशक इति**। नि
इति शेषः। 'अङ्कयोर्मध्यवर्ती च नीचपात्रप्रवेशितः। विष्कम्भ इव ना
प्रवेशक इति स्मृतः ॥' अङ्कयोर्मध्यवर्तीत्यनेन प्रथमाङ्के प्रवेशको नास्त
गन्तव्यम्। यथा शाकुन्तले चतुर्थाङ्के यद्यपि दम्भाहंकारयोः सर्वदूषक
चपात्रत्वेन प्राकृतभाषयैव भवितव्यम्, तथापि 'कार्यतश्चोत्तमादीनां
भाषाविपर्ययः' इति वचनात्संस्कृतभाषाश्रयणं दम्भाहंकारयोर्दूषक
नीचत्वं न तु जात्या। अतश्च संस्कृतभाषाश्रयणम्। प्रवेशकः प्राकृतभ
वक्तव्य इति नियमाभावाद्दम्भाहंकारौ नीचौ विद्वांसौ च। **ततः प्रवि**
**त्यादि**। बार्हस्पत्यमतमाश्रित्याह—**आत्मास्तीत्यादि**। देहाद्व्यति
र्तिर्देहव्यतिरिक्त आत्मास्ति। स च लोकान्तरितः। अत्र लोकशब्देन दे

हाणामलंकरणं सूचितम्। सौधमूर्धसु प्रासादमस्तकेष्वमराणां देवानां पतिरि
धनुषो धाम स्वरूपं तद्विचित्रा नानारूपाः पताका धूयन्तां कल्प्यन्ताम्।
नगरद्वारपरिष्कारो ध्वनितः। इदं सर्वं महामोहप्रवृत्तिजनकमिति सूचितम् ॥
प्रत्यासन्नोऽतिसमीपमागतः तत्प्रत्युद्गमनेनेति यस्मात्कारणादतिनिकटवर्ती त
त्कारणात् प्रत्युद्गमनेन। संमुखगमनेनेत्यर्थः ॥—**तत इति**। विभवेनेति।
वतः स्वसामर्थ्येन महामोहः प्रविशतीत्यन्वयः। चकारो भिन्नक्रमः। प
सेवकवर्गश्च प्रविशतीत्यस्यानुषङ्गः। निरङ्कुशा जडधियः निर्मर्यादा मूढाः ॥
रङ्कुशत्वं प्रकटयति लोकायतिकमतेन—**आत्मेति**। देहाद्व्यतिरिक्तमूर्तिरात्मा

---

१ 'सहपरिवारः' इति पाठः। २ 'देहाद्व्यतिरिक्त' इति पाठः। ३
यसी' इति पाठः।

इदं च स्वकल्पनाविनिर्मितपदार्थाऽवष्टम्भेन जगदेवं दुर्विदग्धै-
यते । तथाहि—

नास्त्येव तदस्ति वस्त्विति मृषा जल्पद्भिरेवास्तिकै-
र्वाचालैर्बहुभिस्तु सत्यवचसो निन्द्याः कृता नास्तिकाः ।
ो पश्यत तत्त्वतो यदि पुनश्छिन्नादितो वर्ष्मणो
दृष्टः किं परिणामरूपितचितेर्जीवः पृथक्कैरपि ॥ १७ ॥

ते । फलानां स्वर्गादीनां भोक्तेत्यतिशयेन निरङ्कुशा निर्भीका जडधियो वदन्ति । ो आश्चर्यम् । इयमाशाऽकाशतरोः प्रथीयसः पृथुतरात्प्रसूनात्स्वादुफलप्र- ो । तद्विषयभूता अतस्तादृशीत्यर्थः । अत्र निदर्शनालंकारः ॥१६॥—**इदं चे-** **दि** । यदुक्तं तद्रूपपदार्थास्तेषामवष्टम्भेन दुर्विदग्धैर्वैशेषिकादिभिर्जगद्व्यत ॥—**यन्नास्तीत्यादि** । यद्वस्तु देहव्यतिरिक्त आत्मापूर्वादिकं नास्त्येव ाणं तद्वस्त्वस्तीति जल्पन्तः प्रलपन्त एवास्तिकाः सत्यवचसो वयं बहुभिर्वा- लैः कौमारिलप्रभृतिभिर्नास्तिका इत्यङ्गीकृताः । अहो आश्चर्यम् । पश्यत त- तः । तत्त्वमवलम्ब्य विचारणां कुरुतेत्यर्थः । छिन्नात्खण्डितादितो वर्ष्मणो तपरिणामरूपितचितेः परिणामभूतसंहतिस्तेन रूपिता तदात्मना निरूपिता तिश्चैतन्यं यस्य वर्ष्मणस्तस्मात् । अत्र बहुव्रीहिसमासाश्रयणात् 'तृतीयादिषु षितपुस्कं–' इत्यादिना पुंवद्भावाच्चितेरिति रूपसिद्धिर्यद्यस्ति तर्हि हृदयाद्यवय-

आत्मा लोकान्तरितः स्वर्गलोकं गतः फलानां स्वर्गादीनां भोक्तेति यत् इयमा- शतरोः प्रसूनादाकाशवृक्षपुष्पात्स्वादुफलस्य मधुरफलस्य प्रसूतावुत्पत्तौ प्रथीयसी ती आशेत्यर्थः ॥ १६ ॥—उक्तेऽर्थे उपपत्तिमाह—**इदं चेति** । स्वकल्पनया तु परमार्थविचारणयेत्यर्थः । अवष्टम्भेनाङ्गीकारेण दुर्विदग्धैर्दुर्बुद्धिभिः ।—**यन्नेति** । भिर्वाचालैः कोलाहलरसिकैरास्तिकैर्वैदिकैः नास्तिका वेदबाह्याः सत्यवचस एव न्याः कृताः । कीदृशैरास्तिकैः । यद्वस्तु शरीराद्भिन्नमात्मस्वरूपं तन्नास्त्येव प्र- क्षेणानुपलम्भात्तद्वस्त्वस्तीति मृषाजल्पद्भिः । ये वयं सत्यप्रमाणवादिनस्ते ना- काः कृताः स्वयमप्रमाणं वदन्तः कथमास्तिका इति न विद्म इति तात्पर्यम् । मते युक्तिं दर्शयति । हंहो इत्याश्चर्येऽव्ययम् । छिन्नाच्छेदितादितोऽस्माद्वर्ष्मणः श- ात्पृथग्भिन्नो जीवः कैरपि दृष्टो यदि तर्हि पुनर्वारंवारं तत्त्वतः सम्यक्तया पश्यत वारयत । अचेतनक्षोण्यारब्धे तत्कथं चैतन्यं तत्राह । परिणामेन रूपान्तरापत्त्या पेता उत्पादिता चितिः चैतन्यं यस्य सः क्रमुकादीनां मिलितानां रागजनकत्वव-

१ 'स्वकपोलकल्पना' इति पाठः । २ 'जगदेतैर्दुर्विदग्धैः' इति पाठः ।

अपि च न केवलं जगदात्मैव तावदमीभिर्वञ्च्यते। तथाहि—

तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो
[1]योषेयं वसु चापरस्य तदमुं भेदं न विद्मो वयम्।
हिंसायामथवा यथेष्टगमने स्त्रीणां परस्वग्रहे
कार्याकार्यविचारणा[2] हि यदमी निःपौरुषाः कुर्वते॥ १८॥

(विचिन्त्य सश्लाघम्) सर्वथा लोकायतमेव शास्त्रं यत्र प्रत्यक्षमेव प्रमाणं पृथिव्यप्तेजोवायवस्तत्त्वानि, अर्थकामौ पुरुषार्थौ, भूता...

---

...वदृश्यत इति भावः॥१७॥ एते दुर्विदग्धाः परान्नाशयित्वा स्वयमपि नश्यन्ती... ह—तथाहीत्यादि। तुल्यत्व इति। मुखाद्यवयवैर्वपुषां तुल्यत्वे सति... मश्चातुर्वर्ण्यव्यवस्था कीदृशः। किमाक्षेपे। इयं परस्य योषा, इदं परस्य व... भेदं वयं न विद्मः। हि प्रसिद्धौ। एवं सतीत्यर्थः। परहिंसायामथवा परस्त्रीणां... ष्टगमने परस्वग्रहे परद्रव्यापहारे वा निःपौरुषाः पौरुषहीनाः सन्तः कार्या... विचारणाः कर्तव्याकर्तव्यविचारान्। यदिति कस्मादर्थे। कुतो हेतोरि... 'यतो मन्दास्त्वाम्' इतिवद्यदिति। सश्लाघम्। श्लाघा नाम गुणकीर्तनम्।... विशेषणमेतत्॥ १८॥ लोकायतशास्त्रप्रतिपाद्यं प्रमाणस्वरूपं प्रमेयस्वरूपं... प्रत्यक्षमेव प्रमाणम्। एवकारेण प्रमाणान्तराणां प्रत्यक्ष एवान्तर्भावः सू... प्रत्यक्षनिबन्धनव्याप्तिमूलकमनुमानम्। अत एवार्थोत्पत्तिः। अतएव... प्रत्यभिज्ञानिबन्धनत्वादुपमापीति प्रत्यक्षान्तर्भूतान्येवेत्यर्थः। पृथिवी...

---

...न्मिलितभूतानां चैतन्योत्पादकत्वमिति भावः॥ १७॥—न केवलमिति।... ब्दोऽप्यर्थः। अमीभिरास्तिकैर्न केवलं स्वात्मा वञ्च्यते। अपि तु जगदपीत्यर्थः। तुल्यत्वे वपुषामिति। मुखाद्यवयवैर्हस्तपादाद्यवयवैर्वपुषां तुल्यत्वेऽपि... साम्येऽपि वर्णक्रमो ब्राह्मणक्षत्रियवैश्यशूद्रा वर्णास्तेषां क्रमो धर्मनिरूपणरूपः... दृशः। न युक्तिसह इत्यर्थः। किंच इयं स्त्री वसु च इयं परस्य स्त्री परस्य... यद्यस्माद्धेतोरयं भेदस्तममुं भेदं वयं न विद्मो न जानीमः। आस्तिककल्पितः... वहारोऽनर्थक इत्याह। हिंसायां वैदिकहिंसायाम्। अथ वा अथ च स्त्रीणां यथे... यथेच्छं स्वपरस्त्रीणां पर्वकालादावपि सुरताभ्यासे परस्वग्रहे परधनग्रहणे का... कथाः कर्तव्याकर्तव्यविचारा यद्यपि वपुषां साम्यं स्त्रीपुंभिदा न तथापि नि... पुरुषार्थहीनाः कुर्वते। अर्थकामावेव परमपुरुषार्थौ न धर्मो नापि मोक्षस्तत्र... भावादिति भावः॥ १८॥—सश्लाघं सगर्वं लोकायतमेव शास्त्रम्। चार्वाक...

---

१ 'स्त्री चेयं वसु वा परस्य यदमुं' इति पाठः। २ 'कार्यकथास्तथापि' इति पा...

